# अघनाशकगायत्रीस्तोत्रम्

नारद उवाच -
भक्तानुकम्पिन्सर्वज्ञ हृदयं पापनाशनम् ।
गायत्र्याः कथितं तस्माद्गायत्र्याः स्तोत्रमीरय ॥ १॥

आदिशक्ते जगन्मातर्भक्तानुग्रहकारिणि ।
सर्वत्र व्यापिकेऽनन्ते श्रीसन्ध्ये ते नमोऽस्तु ते ॥ २॥

त्वमेव सन्ध्या गायत्री सावित्री च सरस्वती ।
ब्राह्मी च वैष्णवी रौद्री रक्ता श्वेता सितेतरा । ३॥।

प्रातर्बाला च मध्याह्ने यौवनस्था भवेत्पुनः ।
ब्रह्मा सायं भगवती चिन्त्यते मुनिभिः सदा ॥ ४॥ वृद्धा सायं

हंसस्था गरुडारूढा तथा वृषभवाहिनी ।
ॠग्वेदाध्यायिनी भूमौ दृश्यते या तपस्विभिः ॥ ५॥

यजुर्वेदं पठन्ती च अन्तरिक्षे विराजते ।
सा सामगापि सर्वेषु भ्राम्यमाणा तथा भुवि ॥ ६॥

रुद्रलोकं गता त्वं हि विष्णुलोकनिवासिनी ।
त्वमेव ब्रह्मणो लोकेऽमर्त्यानुग्रहकारिणी ॥ ७॥

सप्तर्षिप्रीतिजननी माया बहुवरप्रदा ।
शिवयोः करनेत्रोत्था ह्यश्रुस्वेदसमुद्भवा ॥ ८॥

आनन्दजननी दुर्गा दशधा परिपठ्यते ।
वरेण्या वरदा चैव वरिष्ठा वरवर्णिनी ॥ ९॥

गरिष्ठा च वरार्हा च वरारोहा च सप्तमी ।
नीलगङ्गा तथा सन्ध्या सर्वदा भोगमोक्षदा ॥ १०॥

भागीरथी मर्त्यलोके पाताले भोगवत्यपि ।
त्रिलोकवाहिनी देवी स्थानत्रयनिवासिनी ॥ ११॥

भूर्लोकस्था त्वमेवासि धरित्री लोकधारिणी ।
भुवो लोके वायुशक्तिः स्वर्लोके तेजसां निधिः ॥ १२॥

महर्लोके महासिद्धिर्जनलोके जनेत्यपि ।
तपस्विनी तपोलोके सत्यलोके तु सत्यवाक् ॥ १३॥

कमला विष्णुलोके च गायत्री ब्रह्मलोकगा । ब्रह्मलोकदा
रुद्रलोके स्थिता गौरी हरार्धाङ्गनिवासिनी ॥ १४॥

अहमो महतश्चैव प्रकृतिस्त्वं हि गीयसे ।
साम्यावस्थात्मिका त्वं हि शबलब्रह्मरूपिणी ॥ १५॥

ततः परापरा शक्तिः परमा त्वं हि गीयसे ।
इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तिदा ॥ १६॥

गङ्गा च यमुना चैव विपाशा च सरस्वती ।
सरयूर्देविका सिन्धुर्नर्मदेरावती तथा ॥ १७॥

गोदावरी शतद्रुश्च कावेरी देवलोकगा ।
कौशिकी चन्द्रभागा च वितस्ता च सरस्वती ॥ १८॥

गण्डकी तापिनी तोया गोमती वेत्रवत्यपि ।
इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ॥ १९॥

गान्धारी हस्तिजिह्वा च पूषापूषा तथैव च ।
अलम्बुषा कुहूश्चैव शङ्खिनी प्राणवाहिनी ॥ २०॥

नाडी च त्वं शरीरस्था गीयसे प्राक्तनैर्बुधैः ।
हृतपद्मस्था प्राणशक्तिः कण्ठस्था स्वप्ननायिका ॥ २१॥

तालुस्था त्वं सदाधारा बिन्दुस्था बिन्दुमालिनी ।
मूले तु कुण्डली शक्तिर्व्यापिनी केशमूलगा ॥ २२॥

शिखामध्यासना त्वं हि शिखाग्रे तु मनोन्मनी ।
किमन्यद् बहुनोक्तेन यत्किञ्चिज्जगतीत्रये ॥ २३॥

तत्सर्वं त्वं महादेवि श्रिये सन्ध्ये नमोऽस्तु ते ।
इतीदं कीर्तितं स्तोत्रं सन्ध्यायां बहुपुण्यदम् ॥ २४॥

महापापप्रशमनं महासिद्धिविधायकम् ।

य इदं कीर्तयेत् स्तोत्रं सन्ध्याकाले समाहितः ॥ २५॥

अपुत्रः प्राप्नुयात् पुत्रं धनार्थी धनमाप्नुयात् ।
सर्वतीर्थतपोदानयज्ञयोगफलं लभेत् ॥ २६॥

भोगान् भुक्त्वा चिरं कालमन्ते मोक्षमवाप्नुयात् ।
तपस्विभिः कृतं स्तोत्रं स्नानकाले तु यः पठेत् ॥ २७॥

यत्र कुत्र जले मग्नः सन्ध्यामज्जनजं फलम् ।
लभते नात्र सन्देहः सत्यं च नारद ॥ २८॥

शृणुयाद्योऽपि तद्भक्त्या स तु पापात् प्रमुच्यते ।
पीयूषसदृशं वाक्यं सन्ध्योक्तं नारदेरितम् ॥ २९॥

॥ इति श्रीदेवीभागवते महापुराणे द्वादशस्कन्धे
पञ्चमोऽध्याये श्रीअघनाशकगायत्रीस्तोत्रं सम्पूर्णम् ॥